# ॥ सुबोधरामचरितम् ॥

# SUBODHA RAMA CHARITHAM

BY

SISTER V. BALAMMAL

MADRAS:

PRINTED AT THE LAW PRINTING HOUSE, MOUNT ROAD

1916

 [Annas 6.

# ॥ सुबोधरामचरितम् ॥

# SUBODHA RAMA CHARITHAM

BY

SISTER V. BALAMMAL

(Daughter of

Late Dr. A. R. Vaidyanatha Sastriyar, M.A., M.B., & C.M.)

*FIRST EDITION.*

MADRAS:

PRINTED AT THE LAW PRINTING HOUSE, MOUNT ROAD

1916



[Annas 6.

श्रीशारदायै नमः ।

# ॥ सुबोधरामचरितम् ॥

## श्रीमत्या वि. बालाम्बिकया

### प्रणीतम् .

प्रथमसंस्करणम्

चेन्नपुर्यां ला प्रिन्टिङ् हौस् मुद्राक्षरशालायां

१९१६ संवत्सरे मुद्रितम् ॥

मूल्यं ६ आणकाः ॥

DEDICATED

BY KIND PERMISSION

To

SREEMAN

S. RM. M. CT. PETHACHI CHETTIAR, AVL.,

Zemindar of Andipatti, Trichinopoly

FOR HIS PATRONAGE OF ORIENTAL LANGUAGES

BY THE AUTHORESS.

## CONTENTS.

# FOREWORD.

Śrīmatī V. Bālammāl, daughter of the late Dr. A. R. Vaidyanatha Sastriyar, M.A., M.B. & C.M. of Mysore, is the authoress of this little poetical work in Sanskrit called *Subōdharāmacharitam*. It is written in the form of simple Anushṭubh verses and summarises the story of the Rāmāyaṇa. The language throughout is faultless and idiomatic and the style is very simple. Many verses in the work and particularly the Āryās prefixed to each Kāṇḍa are of considerable poetic worth. Sister V. Bālammāl tells me that she studied Sanskrit, when she was a girl, under one of the most eminent Paṇḍits of Southern India and the foremost of the Court Paṇḍits of Mysore, *viz.*, the late *Mahāmahōpādhyāya Brahmaśrī Sundara Sastriar* of Pazhavānēri. I am very favourably impressed with her attainments in Sanskrit and Tamil and

her behaviour. I need hardly add that her work richly deserves a very favourable reception and a very generous encouragement at the hands of all those interested in the education of Hindu women in accordance with Hindu ideals.

S. KUPPUSWAMI SASTRI, M.A., F.M.U.,
*Professor of Sanskrit and Comparative Philology,*
*Presidency College, Madras.*

MYLAPORE,
*30th October, 1916.*

# INTRODUCTION.

Of all the Sanskrit works, the 'Rāmāyaṇa', stands alone by its peculiar merit. It is as immortal as its Divine Hero, the object of its author that this work should serve as the bulwark of Āryan literature having never failed. While in other literatures of the later nations, the old have given place for the new with changes of thoughts and ideas, the Rāmāyaṇa of Vālmīki, retains to this day that spotless fame which it had thousands of years ago and sways such a unifying force among the Hindus with a peculiar charm in its teaching of the Dharmās essential to every day life. The Hindu of whatever caste or tongue he may be, is never tired of hearing or reading the story of Rāmāyaṇa.

Later on poets like Kalidāsa and many others have written the work in a number of dramas, verses, etc., for the sake of the spiritual pleasure they have derived from the work of the great sage. I have also shared that spiritual pleasure as the

result of the Sanskrit education given to me by my beloved parents out of a true sense of duty. I am greatly indebted, specially to my mother, who took much interest for my Sanskrit education, for all my attainments in Sanskrit. I present this humble piece of composition to the generous public who, I strongly hope, will warmly welcome by this conviction.

I beg to pay my humble respects to my Sanskrit tutor, who gave me the first lesson with the word 'Rama', and feel grateful to M.R.Ry. S. Kuppuswami Sastriyar, M.A., F.M.U., who examined this book carefully and wrote a Foreword for the same.

I further express my sincere heartfelt thanks to M.R.Ry. Lakshmana Sastriyar, Sanskrit Pandit, Pachaiyappa's College, Madras, for correcting and examining the proofs, and to the Proprietors of the Law Printing House, Mount Road, Madras, who took special interest in the execution of this book.

SISTER V. BALAMMAL.

MADRAS,<br>
*31st October, 1916.*

श्रीशारदायै नमः ।

बालाम्बिकाकृते

# सुबोधरामचरिते

## ।। बालकाण्डप्रारम्भः ।।

लीलामानुषवेषो
नीलाम्बुदशोभिदेहसुकुमारः ।
सालाभिरामबाहुः
बालाविनुतो रघूद्वहो जयति ।।

साकेतपुरनिवासं
नाकेशसभाज्यपङ्क्तिरथपुत्रम् ।
स्तोकेतरप्रतापं
राकेन्दुमुखं नमामि रघुवीरम् ।।

प्रणम्य जगतामीशं श्रीहरिं श्रितवत्सलम् ।
सुबोधरामचरितं कृतं बालाम्बिकाख्यया ॥ १ ॥

**राजा** दशरथो नाम सूर्यवंशसमुद्भवः ।
अयोध्यानगरेऽवात्सीत्प्रजाः स्वाः परिपालयन् ॥ २ ॥

कौसल्या केकयसुता सुमित्रेति च सुभ्रुवः ।
आसन्महीपतेस्तस्य भार्यास्तिस्रः कुलाङ्गनाः ॥ ३ ॥

पुत्रालाभेन सुचिरं दुःखितश्चिन्तयाऽन्वितः ।
वसिष्ठप्रमुखान्विप्रानित्थमाह स भूपतिः ॥ ४ ॥

किं फलं राज्यभारेण यशसा वा महीयसा ।
निष्फलं ह्यनपत्यस्य जातं जीवितमद्य मे ॥ ५ ॥

तदहं हयमेधेन यक्ष्ये तनयकारणात् ।
यद्यत्रभवतां सम्यगभिप्रायोऽनुमन्यताम् ॥ ६ ॥

एतच्छ्रुत्वा वचो राज्ञस्सुमन्त्रस्सचिवाग्रणीः ।
पुत्रार्थिनं तमाचष्ट भूपं देवरहस्यवित् ॥ ७ ॥

अलं राजन्विषादेन द्रुतं शान्ताकुटुम्बिनम् ।
ऋष्यशृङ्गमिहानाय्य क्रियतां भवताऽध्वरः ॥ ८ ॥

तेन संलप्स्यसे पुत्रान्सर्वलोकसुखप्रदान् ।
इत्यमात्यवचः श्रुत्वा नृपो हृष्टस्तमानयत् ॥ ९ ॥

अथो वसिष्ठमाचार्यं विभण्डकसुतं तथा ।
पुरस्कृत्य क्रतुं कर्तुमारेभे भूपतिस्तदा ॥ १० ॥

तस्मिन्नवसरे देवा दशकन्धरपीडिताः ।
विधात्रा सह शक्राद्याः प्रापुः क्षीरनिधेस्तटम् ॥ ११॥

शयानं शेषशयने श्रीवत्साङ्कितवक्षसम् ।
प्रणम्य जगदाधारमित्थमूचुर्दिवौकसः ॥ १२ ॥

स्वामिन्विश्रवसः पुत्रो लङ्केशो रक्षसां पतिः ।
भवदीयानहो अस्मान्रावणो बाधतेऽनिशम् ॥ १३ ॥

एवं कथयतोऽत्यन्तदुःखार्तान्वीक्ष्य तान्सुरान् ।
लक्ष्मीपतिश्चक्रपाणिरेवमाह कृपानिधिः ॥ १४ ॥

राज्ञः पङ्क्तिरथस्याद्य पुत्रार्थं कुर्वतः क्रतुम् ।
सुतो भूत्वा चतुर्धाऽहं हनिष्यामि भवद्विषम् ॥ १५ ॥

अथ सर्वे सुरास्तावदाज्ञया परमेष्ठिनः ।
स्वांशैरुत्पादयामासुर्वालिमुख्यान्बहून्कपीन् ॥ १६ ॥

ततस्सुग्रीवमुख्यास्ते कृत्वा वालिनमीश्वरम् ।
साकं जाम्बवता स्वेच्छं किष्किन्धानगरेऽवसन्॥१७॥

राजा दशरथः कृत्वा हयमेधं महाक्रतुम् ।
ऋष्यशृङ्गं पुरोधाय पुत्रीयेष्टिमथाकरोत् ॥ १८ ॥

यागाग्निमध्याद्देवांशः कश्चिदुत्थाय पूरुषः ।
पायसं स्वर्णपात्रस्थं ददौ तस्मै महीभुजे ॥ १९ ॥

तस्मात्स्वीकृत्य सोऽप्येतन्निजपत्नीरपाययत् ।
पीत्वा तद्राजपत्न्यस्ता अन्तर्वत्न्योऽभवन्द्रुतम्॥२०॥

संपूर्णे द्वादशे मासि कौसल्या सुशुभे दिने ।
सर्वलोकावनोत्कण्ठं सुतं राममजीजनत् ॥ २१ ॥

तथैव पुत्रं कैकेयी भरतं भ्रातृवत्सलम् ।
पुष्ये पुरुषशार्दूलमसूत गुणवत्तरम् ॥ २२ ॥

अथ लक्ष्मणशत्रुघ्नौ विनयाधिकशालिनौ ।
रूपशीलगुणोत्कर्षौ सुमित्राऽजनयत्सुतौ ॥ २३ ॥

श्रुत्वा पङ्क्तिरथः पुत्रजननं मुदितस्ततः ।
जातकर्मादिकं तेषां पुत्राणां कृतवांस्तदा ॥ २४ ॥

प्रवर्धमानेष्वेतेषु पूर्णिमाचन्द्रकान्तिषु ।
सर्वलोकाभिरामेषु मुमुदे सोऽधिकं नृपः ॥ २५ ॥

तस्मिन्नवसरे गाधिसूनुरागत्य भूमिपं ।
यज्ञरक्षणदक्षं मे रामं देहीत्ययाचत ॥ २६ ॥

प्रथमं दूयमानोऽपि वसिष्ठस्याज्ञया ततः ।
कौशिकस्य करे राजा ददौ रामं सलक्ष्मणम् ॥ २७

सलक्ष्मणाय रामाय मुनिर्विनयशालिने ।
विद्यां बलामतिबलामस्त्राण्यप्युपदिष्टवान् ॥ २८ ॥

अथ मार्गं निरुन्धानां राक्षसीं ताटकाभिधां ।
अवधीद्राघवस्तूर्णं प्रेरितः कौशिकेन सः ॥ २९ ॥

रघूद्वहं ससौमित्रिं मार्गे कुशिकनन्दनः ।
कथाभिर्नन्दयन्प्रापदाश्रमं स्वं गतश्रमः ॥ ३० ॥

समारब्धे ततो यज्ञे विश्वामित्रेण धीमता ।
सत्कर्मद्वेषिणो रुष्टा राक्षसाः पर्यवारयन् ॥ २१ ॥

राघवस्तु शराघातै राक्षसानतिभीषणान् ।
सुबाहुप्रमुखान्सर्वान्निनायान्तकसन्निधिम् ॥ ३२ ॥

मध्येसमुद्रं मारीचं पातयित्वा रघूत्तमः ।
जघान हतशेषांस्तान्मृगेन्द्र इव दन्तिनः ॥ ३३ ॥

निर्विघ्नं राघवबलात्समाप्ते यज्ञकर्मणि ।
राघवाभ्यामुपेतोऽसौ प्रतस्थे मिथिलां पुरीम् ॥ ३४

सह गच्छन्राघवाभ्यां मध्येसरणि कौशिकः ।
गङ्गां त्रिपथगां दृष्ट्वा राममित्थमभाषत ॥ ३५ ॥

भगीरथेन नीतेयं त्वद्वंशगुरुणा धराम् ।
तस्माद्भागीरथीत्येनां कथयन्ति जना भुवि ॥ ३६ ॥

इत्यादिकं पुरावृत्तं कथयन्स मुनिस्ततः ।
गङ्गां तीर्त्वा समं विप्रैः पन्थानं प्रत्यपद्यत ॥ ३७ ॥

अथाहल्या भर्तृशापाच्छिलारूपं गता पुरा ।
रामपादरजस्स्पर्शादाप स्वां प्रकृतिं क्षणात् ॥ ३८ ॥

गौतमेन सभार्येण कौशिकस्सहराघवः ।
स्वीकृत्य कृतमातिथ्यं मिथिलां प्रापदञ्जसा ॥ ३९ ॥

तत्रासौ पूजितो राज्ञा जनकेन सराघवः ।
तद्दर्शितं धनुश्शैवं दर्शयन्राममब्रवीत् ॥ ४० ॥

यद्दर्शनेऽभूः कुतुकी तदिदं पश्य राघव ।
शुल्कार्थं निर्मितमिदं धनुरारोप्यतां त्वया ॥ ४१

इत्यादिष्टेन रामेण तच्चापे नमिते सति ।
दलितं तद्द्विधा देवास्तदा पुष्पैरवाकिरन् ॥ ४२ ॥

तद्दृष्ट्वा जनकस्सीताविवाहकृतनिश्चयः ।
आनीनयत साकेताद्दूतैर्दशरथं मुदा ॥ ४३ ॥

जनकस्सुमुहूर्ते तां सीतां मङ्गलविग्रहाम् ।
ददौ श्रीरामभद्राय लक्ष्मणायोर्मिलामपि ॥ ४४ ॥

माण्डवीं भरतायाथ कुशध्वजसुतां तथा ।
श्रुतकीर्तिं महाभागां शत्रुघ्नाय च धीमते ॥ ४५ ॥

कृतोद्वाहैस्तनुभवैस्सह पङ्क्तिरथः पुरम् ।
प्रत्यागच्छन्नपश्यत्तं जमदग्निसुतं पथि ॥ ४६ ॥

कुठारधरमत्यन्तकठोरवचनं मुनिम् ।
जित्वा रामस्स्वतातस्य चक्रे भयनिवारणम् ॥ ४७ ॥

ततो दशरथः प्राप्य स्वां पुरीमात्मजैस्सह ।
वसति स्म प्रजास्सर्वाः पालयन्नीतिमास्थितः ॥ ४८ ॥

राघवाद्यास्तु चत्वारस्सौशील्याद्यैर्गुणैर्युताः ।
अन्वभूवन्सुखं वीरास्स्वकान्ताभिस्समं चिरम् ॥ ४९ ॥

॥ इति बालकाण्डस्समाप्तः ॥

## ॥ अयोध्याकाण्डप्रारम्भः ॥

कोसलदुहितृतनूजं
वासवमुख्यैस्सुपूजितं नित्यम् ।
हासस्फुरन्मुखाब्जं
दाससुपोषं रघूद्वहं नौमि ॥
जनकसुताप्रियकान्तं
सनकादिब्रह्मनिष्ठनुतशीलम् ।
कनकाम्बरधरमीशं
वनवासरतं रघूत्तमं नौमि ॥

ततो जगाम भरतश्शत्रुघ्नेन समन्वितः ।
युधाजिदभिधानस्य मातुलस्य गृहं प्रति ॥ १

अथ पाङ्क्तिरथः पौरानाहूय सचिवानपि ।
नमस्कृत्य वसिष्ठादीनिदं वचनमब्रवीत् ॥ २ ॥

निवेश्य रामे भूभारं चिरकालाद्धृतं मया ।
विश्रान्तिसुखमिच्छामि युष्माकं यदि सम्मतिः॥ ३ ॥

तच्छ्रुत्वा वचनं सर्वे पौरास्सन्तुष्टमानसाः ।
रामं राजानमिच्छामस्सत्यमित्यूचिरे जनाः ॥ ४ ॥

अलङ्कृत्य पुरीं पौरा वसिष्ठस्य निदेशतः ।
प्रतीक्षन्ते स्म तां वेलामभिषेकाय निश्चिताम् ॥ ५ ॥

विबुधानन्दजननी कैकेयीं प्राप्य मन्थरा ।
निर्मलं हृदयं तस्याश्चकार कलुषं क्षणात् ॥ ६ ॥

मुग्धे किं विस्मृतं राज्ञा पूर्वं दत्तं वरद्वयम् ।
तस्माद्रामो वनं यातु भरतोऽस्तु महीपतिः ॥ ७ ॥

कैकेयी सा तथेत्युक्त्वा चण्डी त्यक्तप्रसाधना ।
रुरोद स्रस्तधम्मिल्ला भूपालागमनावधि ॥ ८ ॥

दृष्ट्वा तु प्रेयसीं राजा तादृशीं शोकविह्वलाम् ।
समालिङ्ग्य तदा तां तदपृच्छच्छोककारणम् ॥ ९

सा निश्वस्य चिरं राज्ञा बहुधा लालिता सती ।
वरद्वयं दत्तपूर्वं ययाचे तं महीपतिम् ॥ १० ॥

चतुर्दशाब्दान्रामस्य वन्यवृत्त्या वने स्थितिः ।
भरतस्यात्मजस्यैतद्राज्यप्राप्तिर्भवेदिति ॥ ११ ॥

कैकेय्योक्तं वचश्श्रुत्वा सत्यवाग्भूपतिस्तदा ।
हा हन्त पुत्रवात्सल्यान्मूर्छितस्तत्र तत्क्षणात् ॥१२॥

तत्रागतस्तदा रामस्तातमालोक्य मूर्छितम् ।
किमेतदिति कैकेयीमपृच्छद्विनतस्सुधीः ॥ १३ ॥

मयाद्य याचितं वत्स पुरा दत्तं वरद्वयम् ।
गच्छ त्वं वनवासाय भरतोऽस्तु महीपतिः ॥ १४ ॥

तथेति रामः कैकेयीं प्रणम्य विनयोज्ज्वलः ।
कौसल्यागृहमागत्य सप्रणाममुवाच ताम्॥ १५ ॥

रक्षणीयं त्वया मातश्शरीरं जनकस्य मे ।
गच्छामि वनमद्यैव माऽस्तु शोकस्तवाधुना ॥ १६ ॥

वसिष्ठेनाभिषेकायाऽऽबद्धमङ्गलकौतुकः ।
सीतालक्ष्मणसंयुक्तो रामो वनमगात्तदा ॥ १७ ॥

सुमन्त्रानीतमारुह्य स्यन्दनं रघुसत्तमः ।
तमसायास्तटं सायं प्राप पौरैरनुद्रुतः ॥ १८ ॥

निद्राणान्निशि रामस्तान्वञ्चयित्वा जनान्द्रुतम् ।
निर्ययौ रथमारुह्य रहितं नेमिघोषतः ॥ १९ ॥

शृङ्गिबेराभिधं गत्वा गुहेनाधिष्ठितं पुरम् ।
सुहृदा सङ्गतस्तेन सुमन्त्रमिदमब्रवीत् ॥ २० ॥

गत्वा त्वं नगरं भूपं समाश्वासय दुःखितम् ।
मद्वियोगासहान्पौरानपि मातृगणानिति ॥ २१ ॥

सीतालक्ष्मणसंयुक्तो जटाधारी सवल्कलः ।
गुहेनानीतया नावा ततार स सुरापगाम् ॥ २२ ॥

अथ रामश्चित्रकूटे सुमित्रासुतनिर्मिताम् ।
पर्णशालां सजानिस्सन्नध्यवात्सीत्सुखं गिरौ ॥ २३ ॥

रामादेशात्सुमन्त्रेऽपि प्रत्यायाते महीपतिः ।
वनमेवागमद्राम इति श्रुत्वा मुमूर्च्छ सः ॥ २४ ॥

मुनिशापं दशरथः कौसल्यायै निवेद्य च ।
हा राम राम रामेति प्रलपन्नगमद्दिवम् ॥ २५ ॥

तदा दूतैर्वसिष्ठोऽपि भरतं सानुजं द्रुतम् ।
आनाययत्पुरं तस्मै माता सर्वं न्यवेदयत् ॥ २६ ॥

दुःखार्तस्सोऽपि कैकेयीं विनिन्द्य जननीं ततः ।
विधिवत्कृतवान्सर्वं स्वतातस्यौर्ध्वदैहिकम् ॥ २७ ॥

संप्रार्थितोऽपि भरतोऽभिषेक्तुं साचिवैर्जनैः ।
रामसन्निधिमेवासौ गन्तुकामोऽभवत्तदा ॥ २८ ॥

भरद्वाजाश्रमं प्राप्य तत्र तेनातिथीकृतः ।
ततः सीतान्वितं रामं ससौमित्रिं ददर्श सः ॥ २९ ॥

राघवस्याग्रजस्याथ निपत्य पदयोर्भृशम् ।
उक्त्वा तातस्य मरणं मुमूर्छ भरतस्तदा ॥ ३० ॥

रामः स्वं हृदयं तञ्च समाश्वास्य सहानुजः ।
सीतया सहितः स्नात्वा ददौ पित्रे तिलोदकम् ॥ ३१ ॥

प्रार्थितो भरतेनासौ नगरागमनं प्रति ।
दत्त्वा स्वपादुके रामो भरतायेदमब्रवीत् ॥ ३२ ॥

चतुर्दश समाश्शीघ्रं नीत्वाऽरण्यनिवासतः ।
आगमिष्यामि नगरं मा स्म शोचस्तरामिति ॥ ३३

प्रेषितस्तेन रामेण भरतो नगरं प्रति ।
गृहीत्वा पादुके रामं प्रणम्य स विनिर्ययौ ॥ ३४ ॥

नन्दिग्रामे स भरतो जटाधारी सवल्कलः ।
पादुकान्यस्तराज्यश्रीः रामं ध्यायन्समावसत् ॥ ३५

अत्रेर्महर्षेरावासं गत्वा विश्रम्य राघवः ।
प्रतस्थे दण्डकारण्यं नक्तञ्चरगणैर्वृतम् ॥ ३६ ॥

॥ इति अयोध्याकाण्डस्समाप्तः ॥

## ॥ अरण्यकाण्डप्रारम्भः ॥

करधृतबाणशरास
खरदूषणमुखनिशाचरारातिम् ।
वरदं वारिजनयनं
नीरदनीलं रघूद्वहं नौमि ॥
वारितनैर्ऋतजातं
पालितवनवासिसकलमुनिबृन्दम् ।
साधितनिजसाम्राज्यं
मानितसाकेतमानवं नौमि ॥

अथ दाशरथिस्सीतालक्ष्मणाभ्यां समन्वितः ।
दण्डकाख्ये महारण्ये विचचार धनुर्धरः ॥ १ ॥

तत्रागतं विराधाख्यं रक्षस्सीतापहारकम् ।
निहत्याश्वास्य वैदेहीं रक्षोगात्रं बिलेऽक्षिपत् ॥ २ ॥

शरभङ्गाश्रमं गत्वा दत्त्वा तस्मै स्वदर्शनम् ।
गते दिव्यं पदं तस्मिन्नगस्त्याश्रममाप सः ॥ ३ ॥

प्रणम्य कुम्भसंभूतं विन्ध्यगर्वविनाशिनम् ।
तस्मादातिथ्यमासाद्य दिव्यान्यस्त्राणि चाग्रहीत्॥ ४ ॥

दृष्ट्वा पितृसखं रामो गृध्रराजं जटायुषम् ।
सम्भाव्यापृच्छ्य विनतो ययौ पञ्चवटीं ततः ॥ ५ ॥

तत्र रामः पञ्चवट्यां गोदावर्यास्तटे चिरम् ।
अवसल्लक्ष्मणोपेतस्सीतया सह कान्तया ॥ ६ ॥

तत्र शूर्पणखा नाम सञ्चरन्ती निशाचरी ।
उपेत्य प्रार्थयामास राघवं मदनातुरा ॥ ७ ॥

सोवाच जानकीजानिं रामं सुन्दरविग्रहम् ।
भज मां ब्रह्मणःपौत्रीं दशकण्ठानुजामिति ॥ ८ ॥

तिरस्कृता सा रामेण लक्ष्मणेन च वञ्चिता ।
जानकीं हन्तुमुद्युक्ता तस्या निकटमाययौ ॥ ९ ॥

विलोक्य लक्ष्मणस्तूर्णं तामाकृष्य निशाचरीम् ।
चिच्छेद श्रवणं तस्या नासिकां च तदाऽसिना॥ १० ॥

जवेन सा ततो गत्वा जनस्थानं खरालयम् ।
खराय रक्षोमुख्याय सर्वं वृत्तं न्यवेदयत् ॥ ११ ॥

तच्छ्रुत्वा राक्षसास्सर्वे कोपाविष्टाः खरादयः ।
क्षिप्रं पञ्चवटीं प्राप्य राघवं रुरुधुस्तदा ॥ १२ ॥

नियुज्य लक्ष्मणं सीतारक्षणाय रघूद्वहः ।
अवधीद्राक्षसान्सर्वान्खरमुख्याञ्छितैश्शरैः ॥ १३ ॥

विरूपितमुखी गत्वा लङ्कां शूर्पणखा ततः ।
विवेश यमदूतीव दशकन्धरमन्दिरम् ॥ १४ ॥

जानकीदेहसौन्दर्यं खरादीनां वधं तथा ।
स्वावमानमपि क्रोधाद्रावणाय जगाद सा ॥ १५ ॥

वैदेह्या देहसौन्दर्यं राघवस्य च विक्रमम् ।
श्रुत्वा सीतापहरणे रावणो विदधे मतिम् ॥ १६ ॥

मायाहरिणरूपेण मारीचेन रघूत्तमम् ।
वञ्चयित्वा जनकजामपहर्तुमियेष सः ॥ १७ ॥

राम इत्युक्तमात्रेऽपि भीतभीतं स रावणः ।
निर्बध्य प्रेषयामास मारीचं राघवाश्रमम् ॥ १८ ॥

सुवर्णमृगरूपेण विहरन्काननस्थले ।
अचरन्मन्दमन्दं स जानकीदृष्टिगोचरे ॥ १९ ॥

याचितं सीतया रामः कुरङ्गं हैममद्भुतम् ।
समानेतुं ययौ तत्र निधाय भरतानुजम् ॥ २० ॥

मायामृगेण रामोऽपि वञ्चितस्सन्प्रधावता ।
नक्तञ्चर इति ज्ञात्वा जघानास्त्रेण तं मृगम् ॥ २१ ।

निजरूपेण मारीचो निपत्य धरणितले ।
हा हा लक्ष्मण वैदेहीत्युक्त्वाऽमुञ्चदसून्स्तदा ॥ २२ ॥

तच्छ्रुत्वा वचनं सीता सच्चरित्रा शुचाऽऽकुला ।
लक्ष्मणं प्रेषयामास रामस्य निकटं हठात् ॥ २३ ॥

रन्ध्रान्वेषी तदाहृत्य सीतामेकाकिनीं स्थिताम् ।
प्रतस्थे व्योममार्गस्थो लङ्कां प्रति स रावणः ॥ २४ ॥

जटायुर्वीक्ष्य वैदेहीं क्रन्दन्तीं निर्जने वने ।
निरुध्य रावणं क्रोधात्पक्षाभ्यां तमताडयत् ॥ २५ ॥

नियुध्य सुचिरं तेन कुपितो दशकन्धरः ।
छित्त्वा खड्गेन तत्पक्षौ जगामाकाशवर्त्मना ॥ २६ ॥

भूषणानि तदा सीताविमुक्तान्यम्बरस्थलात् ।
महीध्रशिखरस्थस्य सुग्रीवस्यापतन्पुरः ॥ २७ ॥

अशोकवनमासाद्य तत्र सीतां निवेश्य च ।
न्ययुङ्क्त तद्रक्षणार्थं रावणोऽसौ निशाचरीः ॥ २८ ॥

शिंशुपाद्रुमवेद्यन्ते तस्थौ सा राघवप्रिया ।
दशकन्धरवंशस्य दावानलशिखोपमा ॥ २९ ॥

आगच्छन्नथ रामोऽपि स्वाश्रमं प्रति सत्वरम् ।
दृष्ट्वाऽभिमुखमायान्तमपृच्छदनुजं तदा ॥ ३० ॥

प्रजावतीं विहायैकां विजने विपिने कुतः ।
समागतोऽसि त्वरया मद्वाक्यमविचारयन् ॥ ३१ ॥

तच्छ्रुत्वा लक्ष्मणो रामं प्रणम्य सहसा ततः ।
तवाशुभं शङ्कमाना सीता मां बहुधाऽन्वशात् ॥३२॥

परुषं वचनं तस्या अरुन्तुदमनार्यकम् ।
असोढ्वा द्रष्टुकामस्त्वामागतोऽस्मीत्युवाच सः ॥३३॥

सलक्ष्मणोऽथ रामोऽपि सीतादर्शनलालसः ।
स्वाश्रमं प्राप्य वैदेहीमदृष्ट्वा विललाप सः ॥ ३४ ॥

विचिन्वन्राघवस्सीतां मध्येमार्गं सहानुजः ।
ददर्श मित्रं तातस्य गतसंज्ञं जटायुषम् ॥ ३५ ॥

आश्वासितोऽसौ रामेण जटायुः प्राह राघवम् ।
जहार रावणस्सीतां छित्त्वा पक्षयुगं मम ॥ ३६ ॥

एवमुक्त्वैव सपदि गतायुषि जटायुषि ।
दुःखार्तोऽभूत्तदा रामो बुद्ध्वा कष्टपरंपराम् ॥ ३७ ॥

अन्त्यकर्माणि निर्वर्त्य रामस्तस्य जटायुषः ।
दक्षिणां दिशमागच्छत्सानुजो वनवर्त्मना ॥ ३८ ॥

अयोमुखीं स सौमित्रिरभिभूय निशाचरीम् ।
अन्वगच्छद्वने रामं क्रौञ्चारण्यमहापथे ॥ ३९ ॥

कबन्धबाहुयुगलं विच्छिद्य रघुनन्दनौ ।
सम्बोधितौ ततस्तेन तद्देहमपि देहतुः ॥ ४० ॥

लब्ध्वा दिव्याकृतिमसौ प्रोवाच रघुपुङ्गवम् ।
सुग्रीवमेत्य वैदेहीमवाप्नोतु भवानिति ॥ ४१ ॥

तदादिष्टेन मार्गेण गच्छन्रामस्सहानुजः ।
शबर्या कृतमातिथ्यं जग्राह प्रार्थितस्तया ॥ ४२ ।

ससौमित्रिस्ततो रामश्शबर्यादिष्टवर्त्मना ।
सीतावियोगविधुरः प्राप पम्पासरस्तटम् ॥ ४३ ॥

॥ इति अरण्यकाण्डस्समाप्तः ॥

## ॥ किष्किन्धाकाण्डप्रारम्भः

**मारुतिसेवितचरणं**
**पुरुहूततनूभवस्य दर्पहरम् ।**
**वरुणालयगम्भीरं**
**करुणानिलयं रघूद्वहं नौमि ॥**

विकसत्पङ्कजश्रेणिपरागसुरभिश्शिवः ।
पम्पासरस्तटे मन्दं ववौ मलयमारुतः ॥ १ ॥

तस्मिन्वसन्तसमये सीताविरहकर्शितः ।
मलयानिलसंस्पर्शाद्दूयते स्म रघूद्वहः ॥ २ ॥

प्रेषितस्सूर्यपुत्रेण सुग्रीवेणानिलात्मजः ।
भिक्षुवेषं समाश्रित्य बभाषे रामलक्ष्मणौ ॥ ३ ॥

तदाशयज्ञो हनुमान्मतङ्गाश्रमवासिनः ।
चकार सख्यं रामेण सुग्रीवस्याग्निसाक्षिकम् ॥ ४ ॥

सीतया पातितं पूर्वं सुग्रीवेण प्रदर्शितम् ।
दृष्ट्वाऽऽभरणजालं स मुमोचाश्रूणि राघवः ॥ ५ ॥

सुग्रीवेणाथ मित्रेण संलपन्रघुनन्दनः ।
कथयेति तमप्राक्षीद्वालिविद्वेषकारणम् ॥ ६ ॥

सुग्रीवकथितं श्रुत्वा कृतं दुष्कर्म वालिना ।
सोऽवदद्वालिनं हत्वा राज्यं दास्यामि तेऽचिरात् ॥७॥

स पुनर्दुन्दुभेः कायं पादाङ्गुष्ठेन राघवः ।
निरस्य दूरे सुग्रीवस्याशङ्कामप्यपाकरोत् ॥ ८ ॥

सप्तसालद्रुमान्रामस्तत्र सुग्रीवदर्शितान् ।
बाणेनैकेन युगपदविध्यल्लघुविक्रमः ॥ ९ ॥

अथ राघवसन्दिष्टस्सुग्रीवो योद्धुमग्रजम् ।
आहूय वालिनं तेन विजिग्ये प्रथमं रणे ॥ १० ॥

कृताभिज्ञानमालेन सुग्रीवेण पुना रणे ।
वाली तदा युध्यमानो दलितो राघवेषुणा ॥ ११ ॥

तारावाक्यं स्मरन्वाली बुद्ध्वा रामोऽयमित्यथ ।
पवित्रीकृतमात्मानं ज्ञात्वा दिव्यं पदं ययौ ॥ १२ ॥

आश्वास्य रामस्सुग्रीवं दुःखितं भ्रातृशोकतः ।
वृत्ते च वालिसंस्कारे लक्ष्मणं वाक्यमब्रवीत् ॥ १३ ॥

धृतव्रतस्य मे नार्हः प्रवेशो नगरस्य यत् ।
अभिषेक्तुमिमं याहि किष्किन्धानगरीं ततः ॥ १४ ॥

कृताभिषेकस्सुग्रीवस्तेन सौमित्रिणा मुदा ।
अङ्गदप्रमुखैर्वीरैः किष्किन्धामध्युवास सः ॥ १५ ॥

तस्मिन्वर्षर्तुसमये रामो विरहविह्वलः ।
गिरौ प्रस्रवणे कृच्छ्राल्लक्ष्मणेनान्वितोऽवसत् ॥ १६ ॥

अतिक्रान्तेऽपि वर्षर्तौ सुग्रीवं वीक्ष्य नागतम् ।
क्रुद्धो रामस्तमानेतुं प्रेषयामास लक्ष्मणम् ॥ १७ ॥

किष्किन्धानगरं गत्वा कोपाविष्टस्स लक्ष्मणः ।
चापघोषं तदा चक्रे कपिवीरभयप्रदम् ॥ १८ ॥

तच्छ्रुत्वा भीतभीतस्स सुग्रीवो मदविह्वलः ।
ताराशमितकोपं तं लक्ष्मणं समुपेयिवान् ॥ १९ ॥

ततः प्रकृतिमापन्नो हरिभिर्हनुमन्मुखैः ।
लक्ष्मणञ्च पुरस्कृत्य सुग्रीवो राममभ्यगात् ॥ २० ॥

सोऽपि रामाज्ञया सीतान्वेषणे धृतमानसः ।
सीतां विचेतुं विनतप्रमुखान्प्राहिणोत्कपीन् ॥ २१ ॥

पूर्वपश्चिमकौबेरदिग्गता ये प्लवङ्गमाः ।
सीतामनुपलभ्यैव मासमात्रात्समागताः ॥ २२ ॥

दक्षिणाशागता वीरा हनूमत्प्रमुखास्तदा ।
अन्विष्यन्तस्तत्र तत्र जग्मुः पथि महाबिलम् ॥२३॥

अदृष्ट्वा तत्र वैदेहीमथ दृष्ट्वा स्वयप्रभाम् ।
तस्मादङ्गदमुख्यास्ते तया निर्गमिता बहिः ॥ २४ ॥

कालातिपातं दृष्ट्वा ते सुग्रीवाज्ञां च दारुणां ।
इतिकर्तव्यताशून्याश्शरीरं त्यक्तुमुद्यताः ॥ २५ ॥

श्रुत्वा ते जानकीवृत्तं सम्पातिवचसा ततः ।
प्रहृष्टाः प्लवगाः प्रापुर्दक्षिणाम्भोनिधेस्तटम् ॥ २६ ॥

दृष्ट्वा तमतिगम्भीरं पारावारं प्लवङ्गमाः ।
तरणे तस्य भग्नाशा विषण्णा अवतस्थिरे ॥ २७ ॥

धीमता समयज्ञेन स्तुतो जाम्बवता तदा ।
समुद्रलङ्घने श्रीमानुद्यतोऽभूत्स मारुतिः ॥ २८ ॥

अभिवाद्य सुरान्सर्वाञ्जाम्बवत्प्रमुखानपि ।
महेन्द्रभूधरप्रस्थमारुरोहानिलात्मजः ॥ २९ ॥

इति किष्किन्धाकाण्डः समाप्तः ॥

## ॥ अथ सुन्दरकाण्डप्रारम्भः ॥

चण्डरुचिवंशमौक्तिक-
मण्डनभूतं ह्यखण्डगुणसिन्धुम्।
आखण्डलादिवन्द्यं
प्रचण्डदोर्दण्डमण्डितं नौमि ॥

दशकण्ठहृतां सीतां विचेतुं मारुतात्मजः।
महेन्द्रशैलशिखरादुदस्थादम्बरान्तरे ॥ १ ॥

आपृच्छ्य पथि मैनाकं जित्वा च सुरसां ततः।
निहत्य सिंहिकामब्धेस्तीरमाप स मारुतिः ॥ २ ॥

तामालोक्य पुरीं लङ्कां त्रिकूटशिखरे स्थिताम्।
असङ्ख्यैः स्वर्णकलशैरावृतां विस्मितोऽभवत् ॥ ३ ॥

अगाधमेतं जलधिं तरेयुर्वानराः कथम् ।
इति सञ्चिन्तयामास बहुधा मारुतिस्तदा ॥ ४ ॥

प्रच्छन्ननिजवेषस्सन्नुदिते शशलाञ्छने ।
अन्वेष्टुं मारुतिस्सीतां प्रविवेश स तां पुरीम् ॥ ५ ॥

मार्गं निरुध्य सहसा तर्जयन्तीं स मारुतिः ।
लङ्काधिदेवतां जित्वा प्रविष्टो विनुतस्तया ॥ ६ ॥

प्रधाव्योत्तुङ्गशिखरान्प्रासादानञ्जनासुतः ।
सीतां गवेषयामास तस्मिन् लङ्कापुरे निशि ॥ ७ ॥

विचिन्वंस्तत्र वैदेहीं सुप्तां मन्दोदरीं तदा ।
सीतेयमिति मन्वानस्तामद्राक्षीत्ससम्भ्रमम् ॥ ८ ॥

निशाचरीत्यमूं बुद्ध्वा शयानां शयने शुभे ।
प्रासादं दशवक्त्रस्य प्रविवेशानिलात्मजः ॥ ९ ॥

कुलभूधरसच्छायं स्वपन्तं तत्र मारुतिः ।
सीतापहारिणं रौद्रं ददर्श दशकन्धरम् ॥ १० ॥

मार्गमाणस्स वैदेहीं तस्मिन्नन्तःपुरे चिरम् ।
अदृष्ट्वा तां विषण्णस्सन्नित्थं चिन्तापरोऽभवत् ॥११॥

अन्वेषिताऽपि सर्वत्र न दृष्टा जानकी मया ।
अतस्समुद्रतरणश्रमो मे विफलोऽभवत् ॥ १२ ॥

बहुधा चिन्तयन्नेवं विविधद्रुमसंयुताम् ।
प्रविवेशाञ्जनासूनुरशोकवनिकां तदा ॥ १३ ॥

विचिन्वंस्तत्र तां देवीं बहुधा राघवप्रियाम् ।
शिंशुपाद्रुमवेद्यन्ते समैक्षत विदेहजाम् ॥ १४ ॥

शिंशुपावृक्षमारुह्य तत्पत्रच्छन्नविग्रहः ।
दुःखितामनवद्याङ्गीं दृष्ट्वा सीतेत्यमंस्त सः ॥ १५ ॥

म्लानवक्त्रामतिकृशां शोचन्तीं मलिनाम्बराम् ।
ववन्दे मारुतिस्सीतां पतिध्यानपरायणाम् ॥ १६ ॥

तत्रागत्य दशग्रीवस्सीतां तां लोकमातरम् ।
बहुधा प्रार्थयामास दुरात्मा भज मामिति ॥ १७ ॥

तिरस्कृतेऽथ वैदेह्या निष्क्रान्ते दशकन्धरे ।
पापेन तेन निर्दिष्टा राक्षस्यस्तामतर्जयन् ॥ १८ ॥

राक्षसी त्रिजटा नाम तामाश्वास्य विदेहजाम् ।
उवाच कञ्चन स्वप्नं स्वदृष्टं मैथिलीहितम् ॥ १९ ॥

दशग्रीवस्य दुर्वाक्यं राक्षसीनां च तर्जनम् ।
अपारयन्ती सोढुं सा प्राणान्मोक्तुं समुद्यता ॥ २० ॥

ततस्सुप्तासु सर्वासु राक्षसीष्वनिलात्मजः ।
सीतां प्रपद्य प्रोवाच शरीरं त्यक्तुमुद्यताम् ॥ २१ ॥

त्यजेदं कर्म वैदेहि रामं द्रक्ष्यासि सत्वरम् ।
दूतोऽहं रघुवीरस्य त्वां विचेतुमिहागतः ॥ २२ ॥

सप्रणाममिदं वाक्यमुक्तवन्तं कृताञ्जलिम् ।
मारुतिं वीक्ष्य सा सीता शशङ्के रावणं तदा ॥ २३ ॥

तेन दत्तं ततो दृष्ट्वा रामनामाङ्गुलीयकम् ।
मुमूर्च्छ तत्क्षणं सीता पतिदर्शनलालसा ॥ २४ ॥

समाश्वास्य तदा सीतां दुःखितामञ्जनासुतः ।
क्षिप्रं नेष्यति रामस्त्वां शोको मास्त्वित्युदैरयत् २५

चूडामणिं तया दत्तं गृहीत्वा वानरर्षभः ।
प्रणम्य जानकीं प्रह्वः प्रतस्थे हृष्टमानसः ॥ २६ ॥

अनेकतरुसङ्कीर्णामशोकवनिकां तदा ।
बभञ्ज मारुतिस्तूर्णमवधीत्किङ्करान्बहून् ॥ २७ ॥

जम्बुमालिनमाहत्य सप्त मन्त्रिसुतानपि ।
पञ्च सेनापतींश्चाक्षं नीतश्शक्रजिता पुरम् ॥ २८ ॥

सोऽब्रवीद्रावणं दृष्ट्वा मुञ्च राक्षस जानकीम् ।
न चेद्राघवबाणस्त्वां नयेद्यमपुरीमिति ॥ २९ ॥

लङ्केशस्तद्वचः श्रुत्वा क्रुद्धस्स्वान्वीक्ष्य किङ्करान् ।
वानरो हन्यतामेष शीघ्रमित्यादिशत्तदा ॥ ३० ॥

तस्यानुजोऽथ धर्मात्मा लङ्कानाथं विभीषणः ।
अवध्यो वानरो दूतस्सर्वथेत्याद्यबोधयत् ॥ ३१ ॥

तदङ्गीकृत्य भृत्यान्स्वानादिदेश दशाननः ।
दुष्टशाखामृगस्यास्य लाङ्गूलं दह्यतामिति ॥ ३२ ॥

निशाचरास्ततस्सर्वे लाङ्गूलं तस्य वह्निना ।
संहृष्टा दीपयामासुः कार्पासपटवेष्टितम् ॥ ३३ ॥

सीताभ्यर्थनशीतेन वह्निना तेन मारुतिः ।
संवीक्ष्य रक्षसां वेश्मान्यशेषेण ददाह सः ॥ ३४ ॥

विहायाशोकवनिकां विभीषणगृहं तथा ।
दग्ध्वा लङ्कापुरीं सर्वां तुतोष पवनात्मजः ॥ ३५ ॥

सीतानिकटमासाद्य प्रणम्याश्वास्यतां पुनः ।
प्रतिप्रयाणाय मतिं चक्रे पवननन्दनः ॥ ३६ ॥

अनुज्ञाप्य च तां कृच्छ्रादारुह्यारिष्टभूधरम् ।
उल्लङ्घ्य सागरं तूर्णमपश्यद्वानरानसौ ॥ ३७ ॥

अञ्जनातनयं दृष्ट्वा जाम्बवत्प्रमुखास्तदा ।
ससम्भ्रमं तमालिङ्ग्य तुतुषुः प्लवगोत्तमाः ॥ ३८ ॥

अथ दृष्टेति वचनान्मुदितैस्तैस्सहाङ्गदैः ।
गत्वा मधुवनं तत्र यथेच्छमपिबन्मधु ॥ ३९ ॥

मधुपानसुसन्तुष्टैस्सार्धं कपिवरैरसौ ।
राघवं प्राप्य हनुमान्ननाम विनयेन तम् ॥ ४० ॥

दृष्टा सीता मयेत्युक्त्वा तस्मै चूडामणिं ददौ ।
मणिमालोक्य तं रामो हर्षशोकाकुलोऽभवत् ॥ ४१ ॥

कान्ताविभूषणं दृष्ट्वा मत्वा तामङ्कवर्तिनीम् ।
शुश्राव मारुतिमुखाज्जानकीवृत्तमादरात् ॥ ४२ ॥

॥ इति सुन्दरकाण्डस्समाप्तः ॥

## ॥ अथ युद्धकांडप्रारम्भः ॥

दशदिक्प्रथितसुकीर्तिं
दशरथहृदयाम्बुजातमार्ताण्डम् ।
दशवदनानुजपालं
दशवदनारिं रघूद्वहं नौमि ॥

ततो रामस्ससौमित्रिस्सुग्रीवेण समन्वितः ।
प्रेक्षमाणः प्रियावाप्तिं प्रतस्थे दक्षिणां दिशम् ॥ १ ॥

अथासङ्ख्यैः कपिगणैर्हनूमत्प्रमुखैर्मुदा ।
सानुजः प्राप रामोऽसौ तीरं दक्षिणवारिधेः ॥ २ ॥

तदा विभीषणो नाम राक्षसो रावणानुजः ।
अग्रजं दुर्मतिं त्यक्त्वा राघवं शरणं ययौ ॥ ३ ॥

प्रणतं तं महाबाहुश्शरण्यश्श्रितवत्सलः ।
उवाच रघुवीरोऽसौ धर्मात्मानं विभीषणम् ॥ ४ ॥

रणे दशमुखं जित्वा सपुत्रं सबलानुगम् ।
लङ्काधीशं करिष्यामि त्वामेव नचिरादिति ॥ ५ ॥

अथ राघवनिर्देशान्नलः कपिवरैस्सह ।
बबन्ध सागरे सेतुं तदादिष्टेन वर्त्मना ॥ ६ ॥

तीर्त्वा च सेतुना तेन जलधिं दुस्तरं क्षणात् ।
सुग्रीवप्रमुखैस्साकं सुवेलं प्राप राघवः ॥ ७ ॥

सुवेलाधिष्ठितं रामं निशम्य शुकवाक्यतः ।
निशाम्य च दशग्रीवो नैच्छद्दातुं विदेहजाम् ॥ ८ ॥

रघुवीरस्ततस्सैन्यैरसङ्ख्येयैस्समन्वितः ।
रुरोध नगरीं शत्रोः रक्षस्सैन्यसमावृताम् ॥ ९ ॥

ततो वानरवीराणां बलेन सह रक्षसाम् ।
अभवद्दारुणं युद्धमनिमेषसुखावहम् ॥ १० ॥

लक्ष्मणेन च रामेण सुग्रीवप्रमुखैरपि ।
राक्षसा निहतास्सर्वे रणे रावणसैनिकाः ॥ ११ ॥

पाषाणैः पर्वतैर्वृक्षैर्विभिद्यामित्रसैनिकान् ।
जयघोषं तदा चक्रुर्हर्षयुक्ताः प्लवङ्गमाः ॥ १२ ॥

मायया मेघनादस्तु निलीनो गगनस्थले ।
कपिसैन्यान्यनेकानि जघान समिति क्रुधा ॥ १३

यावद्बबन्ध नागास्त्रैस्स धीरावपि राघवौ ।
तावत्तानि महास्त्राणि जगलुर्गरुडागमात् ॥ १४ ॥

रावणोऽपि ततो भग्नो रामेण प्रथमे रणे ।
निद्रालुं तं कुम्भकर्णं प्रबोध्य प्राहिणोद्युधे ॥ १५ ॥

चिरं युद्ध्वाऽथ रामेण कुम्भकर्णे हते पुनः ।
अतिकायादयः पुत्रा रावणेन नियोजिताः ॥ १६ ॥

अतिकायञ्च समरे लक्ष्मणेन निपातितम् ।
श्रुत्वा सन्तप्तहृदयो रावणो दुःखितोऽभवत् ॥ १७ ॥

ततो रावणनिर्दिष्टो ब्राह्मेणास्त्रेण शक्रजित् ।
बद्ध्वा सहानुजं रामं विजयी स्वपुरीमगात् ॥ १८ ॥

अथ जाम्बवदादिष्टो मारुतिर्मारुतोपमः ।
महौषधीनां लाभाय जगामौषधिपर्वतम् ॥ १९ ॥

गृहीत्वा चौषधिगिरिं रणभूमिमवाप्य सः ।
महौषधीनां गन्धेन सर्वान्प्राबोधयच्च तान् ॥ २०

रावणः प्रेषयामास पुनरिन्द्रजितं सुतम् ।
राघवं सानुजं हन्तुं कपिसैन्यान्यपि क्षणात् ॥ २१

मायासीतां समुत्पाद्य कपीनामग्रतः क्रुधा ।
निकृत्य कन्धरां तस्याः पुरन्दरजयी ययौ ॥ २२ ।

गत्वाऽथ रावणिस्तत्र जयार्थं महतां द्विषां ।
निकुम्भिलाख्यं सवनमारेभे नगराद्बहिः ॥ २३ ॥

विभीषणस्य वचसा बुद्ध्वा सर्वं रघूत्तमः ।
वधाय रावणेस्तस्य प्रेषयामास लक्ष्मणम् ॥ २४ ॥

अधिरुह्याञ्जनापुत्रं सौमित्रिर्बलसंयुतः ।
विभीषणेनानुयातो जगामेन्द्रजितं प्रति ॥ २५ ॥

त्रिरात्रं तेन युद्ध्वाऽथ हत्वा तस्याखिलं बलम् ।
ऐन्द्रास्त्रेण प्रचिच्छेद कन्धरां तस्य लक्ष्मणः ॥ २६ ॥

सौमित्रिणा हते तस्मिन्मेघनादे रणाङ्गणे ।
ववृषुः पुष्पनिचयं वासवप्रमुखाःसुराः ॥ २७ ॥

तुष्टुवुश्च महाभागं लक्ष्मणं सिद्धचारणाः ।
तुतुषुर्मुनिसङ्घाश्च जगुर्गन्धर्वकिन्नराः ॥ २८ ॥

अथ पुत्रवधं श्रुत्वा विदीर्णहृदयो भृशम् ।
शोकावेगपरीतात्मा विललाप स रावणः ॥ २९ ॥

हा वत्स निर्जराधीशभुजदर्पविनाशक ।
कथं कुमानुषेण त्वं निहतोऽसि वदाधुना ॥ ३० ॥

कथं त्वामिन्द्रजयिनं नीतवान् स्वपुरं यमः ।
जीवत्यपि दशास्येऽद्य सर्वलोकभयङ्करे ॥ ३१ ॥

इत्थं विलप्य वैदेहीं जिघांसुर्मन्त्रिवारितः ।
रथमारुह्य सक्रोधो रणभूमिमवाप सः ॥ ३२ ॥

रथं मातलिनाऽऽनीतमिन्द्रेण प्रेषितं तदा ।
समारुह्याथ युयुधे धृतचापस्स राघवः ॥ ३३ ॥

तेन युद्ध्वा चिरं रामोऽप्यस्त्राण्यस्त्रैर्निवारयन् ।
चकर्त दशकण्ठस्य शिरांस्येकशतानि सः ॥ ३४ ॥

छिन्नान्पुनः पुना रूढान्मूर्ध्नस्तस्यावलोक्य सः ।
रघुश्रेष्ठो दुरात्मानं ब्रह्मास्त्रेणावधीत्ततः ॥ ३५ ॥

मन्दोदरी मयसुता श्रुत्वा भर्तुस्तदा वधम् ।
समराङ्गणमागत्य विललाप मुमूर्च्छ च ॥ ३६ ॥

अथ राघवनिर्दिष्टस्सहामात्यो विभीषणः ।
आहिताग्नीयसंस्कारं चक्रे भ्रातुर्यथाविधि ॥ ३७ ॥

कृताभिषेको लङ्कायां लक्ष्मणेन विभीषणः ।
नीतवाञ्जानकीं साध्वीं रामस्य निकटं मुदा ॥ ३८ ॥

परुषं वाक्यमाकर्ण्य प्रविष्टां जातवेदसम् ।
जग्राह सच्चरित्रां तां सीतां रामोऽग्निवाक्यतः ॥ ३९ ॥

ब्रह्माद्यैस्स स्तुतो देवैर्महेशेनाभिभाषितः ।
प्रणिपत्य विमानस्थं तातं दशरथं मुदा ॥ ४० ॥

विभीषणाद्यैस्सुग्रीवप्रमुखैस्सह राघवः ।
सीतालक्ष्मणसंयुक्तः प्रतस्थे पुष्पके स्थितः ॥ ४१ ॥

प्रदर्शयन्स सीतायै सेतुबन्धादिकं क्रमात् ।
भरद्वाजाश्रमं प्राप्य पुष्पकात्समवातरत् ॥ ४२ ॥

निवेद्य स्वागतिं पूर्वं भरताय हनूमता ।
भरद्वाजाश्रमात्तस्मान्नन्दिग्राममगात्प्रभुः ॥ ४३ ॥

भरतेनार्थितो रामस्साकेतं प्राविशत्पुरम् ।
निजागमनसन्तुष्टहार्द्भिः पौरजनैर्वृतः ॥ ४४ ॥

अभिषेकार्थमानीतैः पुण्यतीर्थोदकैः क्रमात् ।
कृताभिषेको रामोऽथ वसिष्ठेन महात्मना ॥ ४५ ॥

क्रमेण पूर्वैर्मन्वाद्यैस्सूर्यवंश्यैरधिष्ठिते ।
सिंहासने स्थितो रेजे सीतया सह भार्यया ॥ ४६ ॥

अनुजैर्मुनिभिर्देवैः पौरैर्वानरपुङ्गवैः ।
विभीषणहनूमद्भ्यां सेव्यमानो रराज सः ॥ ४७ ॥

रामानुज्ञातया दत्तं भूषणं सीतया मुदा ।
कण्ठे कृत्वाऽञ्जनापुत्रश्शुशुभे तत्सभान्तरे ॥ ४८ ॥

अथानुज्ञाप्य सुग्रीवं लङ्केशं च विभीषणम् ।
अनर्घैर्भूषणैर्वस्त्रैर्मानयामास राघवः ॥ ४९ ॥

विभीषणस्ततो लङ्कां प्रययौ राक्षसैस्सह ।
सुग्रीवाद्याश्च किष्किन्धां प्राप्य तत्रावसन्सुखम् ॥ ५

यथाकालञ्च ववृषुर्मेघा धर्मरताः प्रजाः ।
सस्यपूर्णा च वसुधा रामे राज्यं प्रशासति ॥ ५१

रञ्जयन्ननुजान्पौरान्मातॄश्च सचिवानपि ।
सीतया सहितो रामश्शशास धरणीं चिरम् ॥ ५२

॥ इति युद्धकाण्डस्समाप्तः ॥

॥ सुबोधरामचरितं सम्पूर्णम् ॥

•PRINTED AT THE LAW PRINTING HOUSE, MADRAS—1916.